## पञ्चनवतितमोऽध्यायः।

वानप्रस्थस्तपसा शरीरं शोषयेत्। ग्रीष्मे पञ्चतपाः स्यात्। आकाशशायी प्रावृषि। आर्द्रवासा हेमन्ते। नक्ताशी स्यात्। एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात्। पुष्पाशी। फलाशी। शाकाशी। पर्णाशी। मूलाशी। यवान्नं पक्षान्तयोर्वा सकृदश्नीयात्। चान्द्रायणैर्वा वर्त्तेत। अश्मकुट्टः। दन्तोलूखलिको वा ॥ १—१५ ॥

तपोमूलमिदं सर्वं दैवमानुषकं जगत्।
तपोमध्यं तपोऽन्तञ्च तपसा च तथा धृतम् ॥ १६
यद्दुश्चरं यद्दुरापं यद्दूरं यच्च दुष्करम्।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७

इति वैष्णवे धर्मशास्त्रे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः।

अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात्। आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात्। सप्तागारिकं भैक्ष्यमादद्यात्। अलाभे न व्यथेत। न भिक्षुकं भिक्षेत। भुक्तवति जनेऽतीते पात्रसम्पाते भैक्ष्यमादद्यात्। मृन्मये दारुपात्रेऽलाबुपात्रे

वा। तेषाञ्च न अश्रद्धि: शुद्धि: स्यात्। अभिपूजितलाभादुद्विजेत॥ शून्यागारनिकेतन: स्यात्। वृक्षमूलनिकेतनो वा। न ग्रामे द्वितीयं रात्रिमावसेत्। कौपीनाच्छादनमात्रमेव वसनमादद्यात्। दृष्टिपूतं न्यसेत् पादम्। वस्त्रपूतं जलमादद्यात्। सत्यपूतं वदेत्। मन:पूतं समाचरेत्। मरणं नाभिकामयेत् जीवितञ्च। अतिवादांस्तितिक्षेत। न कञ्चनावमन्येत। निराशी: स्यात्। निर्नमस्कार:॥ १—२२॥

वास्यैकं तक्षतो वाहुं चन्दनेनैकमुक्षत:।
नाकल्याणं न कल्याणं तयोरपि च चिन्तयेत्॥ २३

प्राणायामधारणाध्याननित्य: स्यात्। संसारस्यानित्यतां पश्येत्। शरीरस्याशुचिभावम्। जरया रूपविपर्य्ययम्। शारीरमानसागन्तुकव्याधिभिश्चोपतापम्। सहजैश्च। नित्यान्धकारे गर्भे वसतिम्। मूत्रपुरीषमध्ये च। तत्र च शीतोष्णदु:खानुभवनम्। जन्मसमये योनिसङ्कटनिर्गमान्महादु:खानुभवनम्। वाल्ये मोहं गुरुपरवेश्यताम्। अध्ययनादनेकक्लेशम्। यौवने च विषयप्राप्तावप्राप्तौ तदव्याप्तौ विषयसेवनान्नरके पतनम्। अप्रियैः सहितं प्रियैश्च विप्रयोगम्। नरकेषु च सुमहद्दु:खम्। संसारसंसृतौ तिर्य्यग्योनिषु च। एवमस्मिन् सततपापिनि संसारे न किञ्चित् सुखम्। यदपि किंचिद्दु:खापेक्षया सुखसंज्ञं तदप्यनित्यम्। तत्सेवाशक्तावलम्बने वा महद्दु:खम्। शरीरञ्चेदं सप्तधातुकं पश्येत्। वसारुधिरमांसास्थिमेदोमज्जाशुक्रात्मकम्॥ चर्म्मावनद्धम्। दुर्गन्धि च। मलायतनम्। सुखशतैरपि दृष्टं विकारि। प्रयत्नाद्धृतमपि विनाशि॥

कामक्रोधलोभमोहमदमात्सर्य्यस्थानम्। पृथिव्यापस्तेजोवाय्वाकाशात्मकम्। अस्थिशिराधमनिस्नायुयुतम्। रजस्वलम्। षट्त्वचम्। अस्थ्नां त्रिभिः शतैः षष्ट्यधिकैर्धार्य्यमाणम्। तेषां विभागः। सूक्ष्मैः सह चतुःषष्टिर्दशनाः। विंशतिर्नखाः। पाणिपादशलाकाश्च। षष्टिरङ्गुलीनां पर्वाणि। द्वे पार्ष्ण्योः। चतुःष्टयं गुल्फेषु। चत्वार्य्यरत्न्योः। चत्वारि जङ्घयोः। द्वे द्वे जानु-कपोलयोः। द्वे द्वे अक्षतालूषकश्रोणिफलकेषु। भगास्थ्येकम्। पृष्ठास्थि पञ्चचत्वारिंशद्भागम्। पञ्चदशास्थीनि ग्रीवा। जत्र्वेकम्॥ तथा हनुः। तन्मूले च द्वे। द्वे ललाटाक्षिगण्डे। नासा घनास्थिका। अर्व्वुदैः स्थानकैश्च सार्द्धं द्विसप्ततिः पार्श्वकाः। उरः सप्तदश। द्वौ शङ्खकौ। चत्वारि कपालानि शिरसश्चेति। शरीरेऽस्मिन् सप्तशिराशतानि। नव स्नायुशतानि। धमनीशते द्वे। पञ्चपेशीशतानि। क्षुद्रधमनीनामेकोनत्रिंशल्लक्षाणि नवशतानि षट्पंचाशच्चमन्यः। लक्षत्रयं श्मश्रुकेशकूपानाम्। सप्तोत्तरं मर्म्मशतम्। सन्धिशते द्वे। चतुःपंचाशद्रोमकोटयः सप्तषष्टिश्च लक्षाणि। नाभिरोजोगुदं शुक्रं शोणितं शङ्खकौ मूर्द्धा कण्ठो हृदयंचेति प्राणायतनानि। बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षड़ङ्गानि। वसा वपा अवहननं नाभिः क्लोमा यकृत् प्लीहा क्षुद्रान्त्रं वृक्कौ वस्तिः पुरीषाधानमामाशयो हृदयं स्थूलान्त्रं गुदमुदरं गुदकोष्ठम्। कनीनिके अक्षिकूटे शष्कुली कर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ शङ्खकौ दन्तवेष्टावोष्ठौ ककुन्दरे वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंघातजौ स्तनौ उपजिह्वा स्फिचौ बाहू जङ्घे ऊरु पिण्डिके

तालूदरं वस्तिशीर्षौ चिवुकं गलशुण्डिके अवटश्चेत्यस्मिन् शरीरके स्थानानि। शब्दस्पर्शरसरूपगन्धाश्च विषयाः। नासिकालोचनत्वग्जिह्वाश्रोत्रमिति बुद्धीन्द्रियाणि। हस्तौ पादौ पायूपस्थं जिह्वेति कर्म्मेन्द्रियाणि। मनोबुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः ॥ १—९६ ॥

इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ ९७
क्षेत्रज्ञमेव मां विद्धि सर्व्वक्षेत्रेषु भाविनि।
क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा ॥ ९८

इति वैष्णवे धर्म्मशास्त्रे षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

## सप्तनवतितमोऽध्यायः।

अथस्योत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन् स्वं नासिकाग्रं पश्यन् दिशश्चानवलोकयन् विभीः प्रशान्तात्मा चतुर्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत्। नित्यमतीन्द्रियमगुणं शब्दस्पर्शरसरूपगन्धातीतं सर्व्वज्ञमतिस्थूलम्। सर्व्वगमतिसूक्ष्मम्। सर्व्वतः पाणिपादं सर्व्वतोऽक्षिशिरोमुखं सर्व्वतः सर्व्वेन्द्रियशक्तिम्। एवं ध्यायेत्। ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति। अथ निराकारे लक्ष्यबन्धं कर्त्तुं न शक्नोति तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्व्वं पूर्व्वं ध्यात्वा तत्र लब्धलक्षस्तत्तत् परित्यज्यापरमपरं ध्यायेत्। एवं पुरुषध्यानमारभेत। अत्राप्यसमर्थः स्वहृदयपद्मस्थावा-

स्व,खस्य मध्ये दीपवत् पुरुषं ध्यायेत्। तत्राप्यसमर्थो भगवन्तं वासुदेवं किरीटिनं कुण्डलिनमङ्गदिनं श्रीवत्साङ्कं वन-मालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणमध्यगतभुवं ध्यायेत्। यद्यद्ध्यायति तदाप्नोति ध्यान-गुह्यम्। तस्मात् सर्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत्। न च पुरुषं विना किंचिदप्यक्षरमस्ति। तं प्राप्य मुक्तो भवति॥ १—१४॥

पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः।
तस्मात् पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः॥ १५
प्राग्रात्रापररात्रेषु योगी नित्यमतन्द्रितः।
ध्यायते पुरुषं विष्णुं निर्गुणं पंचविंशकम्॥ १६
तत्त्वात्मानमगम्यंच सर्वतत्त्वविवर्ज्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥ १७
बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थंचान्तिके च तत्॥ १८
अविभक्तंच भूतेन विभक्तमिव च स्थितम्।
भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च॥ १९
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य तिष्ठितम्॥ २०
इति चेत्रं तथा ज्ञानं ज्ञेयंचोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ २१

इति वैष्णवे धर्मशास्त्रे सप्तनवतितमोऽध्यायः॥ ९७॥

---

## अष्टनवतितमोऽध्यायः।

इत्येवमुक्ता वसुमती जानुभ्यां शिरसा च नमस्कारं कृत्वोवाच। भगवंस्त्वत्समीपे सततमेवं चत्वारि महाभूतानि कृतानि यथान्याकाशः शङ्खरूपी वायुश्चक्ररूपी तेजश्च गदारूपं भोऽम्भोरुहरूपी अहमप्यनेनैव रूपेण भगवत्पादमध्यपरिवर्त्तिनी भवितुमिच्छामि। इत्येवमुक्तोभगवांस्तथेत्युवाच। वसुधापि लब्धकामा तथा चक्रे। देवदेवञ्च तुष्टाव। औं नमस्ते। देवदेव। वासुदेव। आदिदेव। कामदेव। कामपाल। महीपाल। अनादिमध्यनिधन। प्रजापते। सुप्रजापते। महाप्रजापते। ऊर्ज्जस्पते। वाचस्पते। जगत्पते। दिवस्पते। वनस्पते। पयस्पते। पृथीविपते। सलिलपते। दिक्पते। महत्पते। मरुत्पते। लक्ष्मीपते। ब्रह्मरूप। ब्राह्मणप्रिय। सर्वग। अचिन्त्य। ज्ञानगम्य। पुरुहूत। पुरुष्टुत। ब्रह्मण्य। ब्रह्मप्रिय। ब्रह्मकायिक। महाकायिक। महाराजिक। चतुर्म्महाराजिक। भास्वर। महाभास्वर। सप्त। महाभाग। स्वर। तुषित। महातुषित। प्रतर्द्दन। परिनिर्म्मित। अपरिनिर्म्मित। वशवर्त्तिन्। यज्ञ। महायज्ञ। यज्ञयोग। यज्ञगम्य। यज्ञनिधन। अजित। वैकुण्ठ। अपार। पर। पुराण। लेख्य। प्रजाधर। चित्रशिखण्डधर। यज्ञभागहर। पुरोडाशहर। विश्वेश्वर। विश्वधर। शुचिश्रवः। अच्युतार्च्चन। घृतार्च्चिः। खण्डपरशो। पद्मनाभ। पद्मधर। पद्मधाराधर। हृषीकेश। एकशृङ्ग। महावराह। द्रुहिण। अच्युत। अनन्त। पुरुष।

महापुरुष। कपिल। साङ्ख्याचार्य्य। विष्वक्सेन। धर्म्म। धर्म्मद। धर्म्माङ्ग। धर्म्मवसुप्रद। वरप्रद। विष्णो। जिष्णो। सहिष्णो। कृष्ण। पुण्डरीकाक्ष। नारायण। परायण। जगत्परायण। नमो नम इति॥ १—१०१॥

स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा।
उवाच सम्मुखं देवं लब्धकमा वसुन्धरा॥ १०२

इति वैष्णवे धर्म्मशास्त्रेऽष्टनवतितमोऽध्याय:॥ ९८॥

---

## नवनवतितमोऽध्याय:।

दृष्ट्वा श्रियं देवदेवस्य विष्णोर्गृहीतपादां तपसा ज्वलन्तीम्।
सुतप्तजाम्बुनदचारुवर्णां पप्रच्छ देवीं वसुधा प्रहृष्टा॥ १

उन्निद्रकोकनदचारुकरे वरेण्ये
उन्निद्रकोकनदानाभिगृहीतपादे।
उन्निद्रकोकनदसद्मसदास्थितीते
उन्निद्रकोकनदमध्यसमानवर्णे॥ २

नीलाञ्जनेत्रे तपनीयवर्णे शुक्लाम्बरे रत्नविभूषिताङ्गि।
चन्द्रानने सूर्य्यसमानभासे महाप्रभावे जगत: प्रधाने॥ ३

त्वमेव निद्रा जगत: प्रधाना लक्ष्मीर्धृति: श्रीविरतिर्जया च।
कान्ति: प्रजा कीर्त्तिरथो विभूति: सरस्वती वागथ पावनी च

स्वधा तितिक्षा वसुधा प्रतिष्ठा
स्थिति सुदीक्षा च तथा सुनीति।
ख्यातिर्विशाला च तथानसूया
स्वाहा च मेधा च तथैव बुद्धि:॥ ५

आक्रम्य सर्वान्तु यथा त्रिलोकीं
तिष्ठत्ययं देववरोऽसिताक्षि।
तथा स्थिता त्वं वरदे तथापि
श्रेष्ठाश्रयं वसति विभूत्या: ॥ ४
इत्येवमुक्ता वसुधां बभाषे लक्ष्मीस्तदा देववराग्रत:स्था।
सदा स्थिताहं मधुसूदनस्य देवस्य पार्श्वे तपनीय वर्णे ॥ ७
अस्याज्ञया यं मनसा स्मरामि
श्रियायुतं तं प्रवदन्ति सन्त:।
संस्मारणे वाप्यथ तत्र चाहं
स्थिता सदा तच्छृणु लोकधात्रि ॥ ८
वसाम्यथ अर्के च निशाकरे च तारागणाढ्ये गगने विमेघे।
मेघे तथालम्बपयोधरे च शक्रायुधाढ्ये च तड़ित्प्रकाशे ॥ ८
तथा सुवर्णे विमले च रूप्ये रत्नेषु वस्त्रेष्वमलेषु भूमे।
प्रसादमालासु च पाण्डुरासु देवालयेषु ध्वजभूषितेषु ॥ १०
सद्य: कृते चाप्यथ गोमये च मत्ते गजेन्द्रे तुरगे प्रहृष्टे।
वृषे तथा दर्पसमन्विते च विप्रे तथैवाध्ययनप्रपन्ने ॥ ११
सिंहासने चामलके च बिल्वे
छत्रे च शङ्खे च तथैव पद्मे।
दीप्ते हुताशे विमले च खड़्गे
आदर्शबिम्बे च तथा स्थिताहम् ॥ १२
पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषितेषु।
भृङ्गारपात्रेषु मनोहरेषु
हृदि स्थिताहञ्च नवोद्धृतायाम् ॥ १३

क्षीरे तथा सर्पिषि शाद्वले च
क्षौद्रे तथा दध्नि पुरन्ध्रिगात्रे।
देहे कुमार्य्याश्च तथा सुराणां
तपस्विनां यज्वकृतांच देहे॥ १४
शूरे च संग्रामविनिर्गते च
स्थितौ मृते स्वर्गसदःप्रयाते।
वेदध्वनौ वाप्यथ शङ्खशब्दे
स्वाहास्वधायामथ वाद्यशब्दे॥ १५
राजाभिषेके च तथा विवाहे
यज्ञे वरे स्नातशिरस्यथापि।
पुष्पेषु शुक्लेषु च पर्वतेषु
फलेषु रम्येषु सरिद्वरासु॥ १६
सरःसु पूर्णेषु तथा जलेषु
सशाद्वलायां भुवि पद्मखण्डे।
वने च वत्से च शिशौ प्रहृष्टे
साधौ नरे धर्म्मपरायणे च॥ १७
आचारसेविन्यथ शास्त्रनित्ये
विनीतवेशे च तथा सुवेशे।
सुशुद्धदान्ते मलवर्ज्जिते च
मृष्टाशने चातिथिपूजके च॥ १८
स्वदारतुष्टे निरते च धर्म्मे
धर्म्मोत्कटे चात्यशनाद्विरक्ते।
सदा सपुष्पे च सुगन्धिगात्रे
सगन्धलिप्ते च विभूषिते च॥ १९

सत्यस्थिते भूतहिते निविष्टे
क्षमाञ्चिते क्रोधविवर्ज्जिते च।
स्वकार्य्यदक्षे परकार्य्यदक्षे
कल्याणचित्ते च सदाविनीते॥ २०
नारीषु नित्यं सुविभूषितासु पतिव्रतासु प्रियवादिनीषु।
अमुक्तहस्तासु सुतान्वितासु सुगुप्तभाण्डासु वलिप्रियासु॥२१
सम्मृष्टवेश्मासु जितेन्द्रियासु कलिव्यपेतासु पथिस्थितासु।
धर्म्मव्यपेक्षासु दयान्वितासु स्थिता सदाहं मधुसूदने तु॥ २२
इति वैष्णवे धर्म्मशास्त्रे नवनवतितमोऽध्यायः॥ ९९॥

---

## शततमोऽध्यायः।

धर्म्मशास्त्रमिदं श्रेष्ठं स्वयं देवेन भाषितम्।
ये द्विजा धारयिष्यन्ति तेषां स्वर्गे गतिः परा॥ १
इदं पवित्रं मङ्गल्यं स्वर्ग्यमायुष्यमेव च।
ज्ञानंचैव यशस्यंच धनसौभाग्यवर्द्धनम्॥ २
अध्येतव्यं धारणीयं श्राव्यं श्रोतव्यमेव च।
श्राद्धेषु श्रावणीयंच भूतिकामैर्नरैः सदा।
इदं रहस्यं परमं कथितं वसुधे तव॥ ३
मया प्रसन्नेन जगद्धितार्थं सौभाग्यमेतत् परमं रहस्यम्।
दुःस्वप्ननाशं बहुपुण्ययुक्तं शिवालयं शाश्वतधर्म्मशास्त्रम्॥ ४
इति वैष्णवे धर्म्मशास्त्रे शततमोऽध्यायः॥ १००॥
इति वैष्णवसंहिता समाप्ता।

---

# मनुसंहिता ।

## प्रथमोऽध्यायः ।

मनुमेकाग्रमासीनमभिगम्य महर्षयः ।
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् ॥ १
भगवन् सर्ववर्णानां यथावदनुपूर्वशः ।
अन्तरप्रभवानाञ्च धर्मान्नो वक्तुमर्हसि ॥ २
त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः ।
अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित् प्रभो ॥ ३
स तैः पृष्टस्तथा सम्यगमितौजा महात्मभिः ।
प्रत्युवाचार्च्च्य तान् सर्वान् महर्षीन् श्रूयतामिति ॥ ४
आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ५
ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥ ६
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ ७
सोऽभिध्यायः शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्ज्जादौ तासु वीजमवासृजत् ॥ ८

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥ ९
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥ १०
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्त्यते॥ ११
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा॥ १२
ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्ममे।
मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतं॥ १३
उद्बबर्हात्मनश्चैव मनः सदसदात्मकम्।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्॥ १४
महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च।
विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च॥ १५
तेषान्त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे॥ १६
यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः॥ १७
तदाविशन्ति भूतानि महान्ति सह कर्मभिः।
मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम्॥ १८
तेषामिदन्तु सप्तानां पुरुषाणां महौजसाम्।
सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः संभवत्यव्ययाद्व्ययम्॥ १९
आद्याद्यस्य गुणन्त्वेषामवाप्नोति परः परः।
यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः॥ २०

सर्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्म्ममे॥ २१
कर्म्मात्मनाञ्च देवानां सोऽसृजत् प्राणिनां प्रभुः।
साध्यानाञ्च गणं सूक्ष्मं यज्ञञ्चैव सनातनम्॥ २२
अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ २३
कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा।
सरितः सागरान् शैलान् समानि विषमाणि च॥ २४
तपो वाचं रतिञ्चैव कामंच क्रोधमेव च।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः॥ २५
कर्म्मनाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्।
द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः॥ २६
अण्वो मात्रा विनाशिन्यो दशार्द्धानान्तु याः स्मृताः।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः॥ २७
यन्तु कर्म्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः।
स तदेव स्वयम्भेजे सृज्यमानः पुनः पुनः॥ २८
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते।
यद्यस्य सोऽदधात् सर्गे तत्तस्य स्वयमाविशत्॥ २९
यथर्त्तुलिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये।
स्वानि स्वान्यभिपद्यन्ते तथा कर्म्माणि देहिनः॥ ३०
लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्॥ ३१
द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥ ३२

तपस्तप्त्वाऽसृजद्यन्तु स स्वयं पुरुषो विराट्।
तं मां वित्तास्य सर्व्वस्य स्रष्टारं द्विजसत्तमाः॥ ३३
अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतीन् प्रजानामसृजं महर्षीनादितो दश॥ ३४
मरीचिमत्र्याङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च॥ ३५
एते मनूंस्तु सप्तान्यानसृजन् भूरितेजसः।
देवान् देवनिकायांश्च महर्षींश्चामितौजसः॥ ३६
यक्षःरक्षःपिशाचांश्च गन्धर्व्वाप्सरसोऽसुरान्।
नागान् सर्पान् सुपर्णांश्च पितृणाञ्च पृथग्गणान्॥ ३७
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च।
उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च॥ ३८
किन्नरान् वानरान् मत्स्यान् विविधांश्च विहङ्गमान्।
पशून् मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः॥ ३९
कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम्।
सर्व्वञ्च दंशमशकं स्थावरञ्च पृथग्विधम्॥ ४०
एवमेतैरिदं सर्व्वं मन्नियोगान्महात्मभिः।
यथाकर्म्म तपोयोगात् सृष्टं स्थावरजङ्गमम्॥ ४१
येषान्तु यादृशं कर्म्म भूतानामिह कीर्त्तितम्।
तत्तथा वोऽभिधास्यामि क्रमयोगञ्च जन्मनि॥ ४२
पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः॥ ४३
अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः।
यानि चैवं प्रकाराणि स्थलजान्यौदकानि च॥ ४४

स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् ।
ऊष्मणश्चोपजायन्ते यच्चान्यत् किंचिदीदृशम् ॥ ४५
उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः ।
ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ॥ ४६
अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७
गुच्छगुल्मन्तु विविधं तथैव तृणजातयः ।
बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८
तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ४९
एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः ।
घोरेऽस्मिन् भूतसंसारे नित्यं सततयायिनि ॥ ५०
एवं सर्वं स सृष्ट्वेदं मांचाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीड़यन् ॥ ५१
यदा स देवो जगर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥ ५२
तस्मिन् स्वपति तु स्वस्थे कर्म्मात्मानः शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥ ५३
युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि ।
तदायं सर्वभूतात्मा सुखं स्वपिति निर्वृतः ॥ ५४
तमोऽयन्तु समाश्रित्य चिरन्तिष्ठति सेन्द्रियः ।
न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः ॥ ५५
यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च ।
समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति ॥ ५६

एवं स जाग्रत्स्वप्नाभ्यामिदं सर्वं चराचरम्।
संजीवयति चाजस्रं प्रमापयति चाव्ययः॥ ५७
इदं शास्त्रन्तु कृत्वासौ मामेव स्वयमादितः।
विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन्॥ ५८
एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः।
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः॥ ५९
ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः।
तानब्रवीदृषीन् सर्वान् प्रीतात्मा श्रूयतामिति॥ ६०
स्वायम्भुवस्यास्य मनोः षड्वंश्या मनवोऽपरे।
सृष्टवन्तः प्रजाः स्वाः स्वा महात्मानो महौजसः॥ ६१
स्वारोचिषश्चौत्तमिश्च तामसो रैवतस्तथा।
चाक्षुषश्च महातेजा विवस्वत्सुत एव च॥ ६२
स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः।
स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्यापुश्चराचरम्॥ ६३
निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला।
त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रन्तु तावतः॥ ६४
अहोरात्रे विभजते सूर्य्यो मानुषदैविके।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः॥ ६५
पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी॥ ६६
दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्॥ ६७
ब्राह्मस्य तु क्षपाहस्य यत् प्रमाणं समासतः।
एकैकशो युगानान्तु क्रमशस्तन्निबोधत॥ ६८

चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ६९
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकपायेन वर्त्तन्ते सहस्राणि शतानि च ॥ ७०
यदेतत् परिसङ्ख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ ७१
दैविकानां युगानान्तु सहस्रं परिसङ्ख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥ ७२
तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः ।
रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः ॥ ७३
तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते ।
प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥ ७४
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात् तस्य शब्दगुणं स्मृतम् ॥ ७५
आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः ।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः ॥ ७६
वायोरपि विकुर्व्वाणाद्विरोचिष्णु तमोनुदम् ।
ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ॥ ७७
ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः स्मृताः ।
अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः ॥ ७८
यत् प्राक् द्वादशसाहस्रमुदितं दैविकं युगम् ।
तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ ७९
मन्वन्तराण्यसङ्ख्यानि सर्गः संहार एव च ।
क्रीड़न्निवैतत् कुरुते परमेष्ठी पुनः पुनः ८०

चतुष्पात् सकलो धर्म्मः सत्यञ्चैव कृते युगे।
नाधर्म्मेणागमः कश्चिन्मनुष्यान् प्रति वर्त्तते॥ ८१
इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्म्मश्चापैति पादशः॥ ८२
अरोगाः सर्व्वसिद्धार्थाश्चतुर्वर्षशतायुषः।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः॥ ८३
वेदोक्तमायुर्मर्त्त्यानामाशिषश्चैव कर्म्मणाम्।
फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्॥ ८४
अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः॥ ८५
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे॥ ८६
सर्व्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः।
मुखबाहूरुपज्जानां पृथक् कर्म्माण्यकल्पयत्॥ ८७
अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत्॥ ८८
प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥ ८९
पशूनां रक्षणं दानमिज्याध्ययनमेव च।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च॥ ९०
एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया॥ ९१
ऊर्द्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्त्तितः।
तस्मान्मेध्यतमं तस्य मुखमुक्तं स्वयम्भुवा॥ ९२

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ ९३

तं हि स्वयम्भूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत् ।
हव्यकव्याभिवाह्याय सर्वस्यास्य च गुप्तये ॥ ९४

यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किंभूतमधिकं ततः ॥ ९५

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः ॥ ९६

ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥ ९७

उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्म्मस्य शाश्वती ।
स हि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ९८

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्म्मकोषस्य गुप्तये ॥ ९९

सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥ १००

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ १०१

तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्वशः ।
स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत् ॥ १०२

विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सम्यक् नान्येन केनचित् ॥ १०३

इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः ।
मनोवाग्देहजैर्नित्यं कर्म्मदोषैर्न लिप्यते ॥ १०४

पुनाति पङ्क्तिं वंश्यांश्च सप्त सप्त परावरान् ।
पृथिवीमपि चैवेमां कृत्स्नामेकोऽपि सोऽर्हति ॥ १०५
इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्द्धनम् ।
इदं यशस्यमायुष्यमिदं निःश्रेयसं परम् ॥ १०६
अस्मिन् धर्म्मोऽखिलेनोक्तो गुणदोषौ च कर्म्मणाम् ।
चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ॥ १०७
आचारः परमो धर्म्मः श्रुत्युक्तः स्मार्त्त एव च ।
तस्मादस्मिन् सदायुक्तो नित्यं स्यादात्मवान् द्विजः ॥ १०८
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥ १०९
एवमाचारतो दृष्ट्वा धर्म्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ ११०
जगतश्च समुत्पत्तिं संस्कारविधिमेव च ।
व्रतचर्य्योपचारंच स्नानस्य च परं विधिम् ॥ १११
दाराधिगमनंचैव विवाहानांच लक्षणम् ।
महायज्ञविधानंच श्राद्धकल्पंच शाश्वतम् ॥ ११२
वृत्तीनां लक्षणंचैव स्नातकस्य व्रतानि च ।
भक्ष्याभक्ष्यंच शौचंच द्रव्याणां शुद्धिमेव च ॥ ११३
स्त्रीधर्म्मयोगं तापस्यं मोक्षं सन्न्यासमेव च ।
राज्ञश्च धर्म्ममखिलं कार्य्याणांच विनिर्णयम् ॥ ११४
साक्षिप्रश्नविधानंच धर्म्मं स्त्रीपुंसयोरपि ।
विभागधर्म्मं द्यूतंच कण्टकानांच शोधनम् ॥ ११५
वैश्यशूद्रोपचारञ्च सङ्कीर्णानांच सम्भवम् ।
आपद्धर्म्मंच वर्णानां प्रायश्चित्तविधिं तथा । ११६

संसारगमनंचैव त्रिविधं कर्म्मसम्भवम्।
निःश्रेयसं कर्म्मणांच गुणदोषपरीक्षणम॥ ११७
देशधर्म्मान् जातिधर्म्मान् कुलधर्म्मांश्च शाश्वतान्।
पाषण्डगणधर्म्मांश्च शास्त्रेऽस्मिन्नुक्तवान्मनुः॥ ११८
यथेदमुक्तवान् शास्त्रं पुरा पृष्टो मनुर्म्मया।
तथेदं यूयमप्यद्य मत्सकाशान्निबोधत॥ ११९

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां प्रथमोध्यायः।

## द्वितीयोऽध्यायः।

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्म्मस्तन्निबोधत॥ १
कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।
काम्यो हि वेदाधिगमः कर्म्मयोगश्च वैदिकः॥ २
सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः।
व्रता नियमधर्म्माश्च सर्वे सङ्कल्पजाः स्मृताः॥ ३
अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित्।
यद् यद्धि कुरुते किंचित् तत्तत् कामस्य चेष्टितम्॥
तेषु सम्यग्वर्त्तमानो गच्छत्यमरलोकताम्।
यथासङ्कल्पितांश्चेह सर्वान् कामान् समश्नुते॥ ५
वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ ६

यः कश्चित् कस्यचिद्धर्म्मो मनुना परिकीर्त्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥ ७
सर्वन्तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्म्मे निविशेत वै॥ ८
श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥ ९
श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्म्मो हि निर्बभौ॥ १०
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः॥ ११
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्॥ १२
अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते।
धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥ १३
श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ।
उभावपि हि तौ धर्म्मौ सम्यगुक्तौ मनीषिभिः॥ १४
उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥ १५
निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्॥ १६
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥ १७
तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते॥ १८

कुरुक्षेत्रं च मत्स्याश्च पंचालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥ १९
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ २०
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥ २१
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः॥ २२
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः॥ २३
एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः।
शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्षितः॥ २४
एषा धर्म्मस्य वो योनिः समासेन प्रकीर्त्तिता।
सम्भवश्चास्य सर्वस्य वर्णधर्म्मान् निबोधत॥ २५
वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥ २६
गार्भैर्होमैर्जातकर्म्मचौड़मौञ्जीनिबन्धनैः।
बैजिकं गार्भिकंचैनो द्विजानामपमृज्यते॥ २७
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥ २८
प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते।
मन्त्रवत् प्राशनंचास्य हिरण्यमधुसर्पिषाम्॥ २९
नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते॥ ३०

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ ३१
शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम्॥ ३२
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥ ३३
चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले॥ ३४
चूड़ाकर्म्म द्विजातीनां सर्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥ ३५
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥ ३६
ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पंचमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥ ३७
आषोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते।
आद्वाविंशात् क्षत्त्रबन्धोराचतुर्विंशतेर्विशः॥ ३८
अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः॥ ३९
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह॥ ४०
कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्वेण शाणक्षौमाविकानि च॥ ४१
मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी॥ ४२

मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पंचभिरेव वा॥ ४३
कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्॥ ४४
ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैलवोदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः॥ ४५
केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः॥ ४६
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः॥ ४७
प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥ ४८
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ ४९
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्॥ ५०
समाहृत्य तु तद्भैक्षं यावदन्नममायया।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः॥ ५१
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः॥ ५२
उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः।
भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च संस्पृशेत्॥ ५३
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः॥ ५४

पूजितं ह्यशनं नित्यं बलमूर्जंच यच्छति।
अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम्॥ ५५

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा।
नचैवात्यशनं कुर्य्यान्न चोच्छिष्टः क्वचिद्व्रजेत्॥ ५६

अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्ज्जयेत्॥ ५७

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥ ५८

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः॥ ५९

त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥ ६०

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्म्मवित्।
शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः॥ ६१

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥ ६२

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने॥ ६३

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥ ६४

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥ ६५

अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥ . ६

वैवाहिको विधि: स्त्रीणां संस्कारो वैदिक: स्मृत:।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिया॥ ६७
एष प्रोक्तो द्विजातीनामौपनायनिको विधि:।
उत्पत्तिव्यञ्जक: पुण्य: कर्म्मयोगं निबोधत॥ ६८
उपनीय गुरु: शिष्यं शिक्षयेच्छौचमादित:।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च॥ ६९
अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुख:।
ब्रह्माञ्जलिकृतोऽध्याप्य लघुवासा जितेन्द्रिय:॥ ७०
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरो: सदा।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलि: स्मृत:॥ ७१
व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरो:।
सव्येन सव्य: स्प्रष्टव्यो दक्षिणेन च दक्षिण:॥ ७२
अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रित:।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्॥ ७३
ब्राह्मण: प्रणवं कुर्य्यादादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्य्यति॥ ७४
प्राक्कूलान् पर्य्युपासीन: पवित्रैश्चैव पावित:।
प्राणायामैस्त्रिभि: पूतस्तत ओङ्कारमर्हति॥ ७५
अकारञ्चाप्युकारञ्च मकारञ्च प्रजापति:।
वेदत्रयान्निरदुहद्भूर्भुव: स्वरितीति च॥ ७६
त्रिभ्य एव तु वेदेभ्य: पादं पादमदूदुहत्।
तदित्यृचोऽस्या: सावित्र्या: परमेष्ठी प्रजापति:॥ ७७
एतदक्षरमेताञ्च जपन् व्याहृतिपूर्विकां।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥ ७८

सहस्रकृत्वस्त्वभ्यस्य वहिरेतत्त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥ ७९
एतयर्चा विसंयुक्तः काले च क्रियया स्वया।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु॥ ८०
ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्॥ ८१
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान्॥ ८२
एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते॥ ८३
क्षरन्ति सर्वा वैदिक्यो जुहोति यजति क्रियाः।
अक्षरस्त्वक्षयं ज्ञेयं ब्रह्म चैव प्रजापतिः॥ ८४
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥ ८५
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम॥ ८६
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते॥ ८७
इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनां॥ ८८
एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः।
तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः॥ ८९
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पंचमी।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता॥ ९०

बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्व्वशः।
कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते॥ ९१
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिन् जिते जितावेतौ भवतः पंचकौ गणौ॥ ९२
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयं।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ ९३
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥ ९४
यश्चैतान् प्राप्नुयात् सर्वान यश्च तान् केवलांस्त्यजेत्।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते॥ ९५
न तथैतानि शक्यन्ते संनियन्तुमसेवया।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥ ९६
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥ ९७
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥ ९८
इन्द्रियाणान्तु सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम॥ ९९
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।
सर्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम्॥ १००
पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्॥ १०१
पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्॥ १०२

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः ॥ १०३
अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ १०४
वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ १०५
नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥ १०६
यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः ।
तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥ १०७
अग्नीन्धनं भैक्ष्यचर्य्यामधः शय्यां गुरोर्हितम् ।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः ॥ १०८
आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्यो दश धर्म्मतः ॥ १०९
नापृष्टः कस्यचिद्ब्रूयात् न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ११०
अधर्म्मेण च यः प्राह यश्चाधर्म्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १११
धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ११२
विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ११३
विद्या ब्राह्मणमेत्याह सेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तमा ॥ ११४

यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने॥ ११५
ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते॥ ११६
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्॥ ११७
सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥ ११८
शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत्॥ ११९
ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते। १२०
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि संप्रवर्द्धन्ते आयुर्विद्या यशो बलम्॥ १२१
अभिवादात् परं विप्रो ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्॥ १२२
नामधेयस्य ये केचिदभिवादं न जानते।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च॥ १२३
भोः शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥ १२४
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥ १२५
यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥ १२६

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥ १२७
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्।
भो-भवत्-पूर्वकन्त्वेनमभिभाषेत धर्म्मवित्॥ १२८
परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च॥ १२९
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः॥ १३०
मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा।
संपूज्या गुरुपत्नीवत् समास्ता गुरुभार्य्यया॥ १३१
भ्रातुर्भार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः॥ १३२
पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्य्यपि।
मातृवद्वृत्तिमातिष्ठेत् माता ताभ्यो गरीयसी॥ १३३
दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम्।
त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु॥ १३४
ब्राह्मणं दशवर्षन्तु शतवर्षन्तु भूमिपम्।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता॥ १३५
वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्॥ १३६
पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः॥ १३७
चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च॥ १३८

तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक्॥ १३९
उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते॥ १४०
एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥ १४१
निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥ १४२
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥ १४३
य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तन्न द्रुह्येत् कदाचन॥ १४४
उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते॥ १४५
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥ १४६
कामान्माता पिता चैनं यदुत्पादयतो मिथः।
सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते॥ १४७
आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साजरामरा॥ १४८
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया॥ १४९
ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्म्मतः॥ १५०

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्॥ १५१
ते तमर्थमपृच्छन्त देवानागतमन्यवः।
देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान्॥ १५२
अज्ञो भवति वै बालः पिता भवति मन्त्रदः।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम्॥ १५३
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान्॥ १५४
विप्राणां ज्ञानतो ज्यैष्ठं क्षत्रियाणान्तु वीर्य्यतः।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः॥ १५५
न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥ १५६
यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥ १५७
यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः॥ १५८
अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम्।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्ममिच्छता॥ १५९
यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्॥ १६०
नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः।
ययास्योद्विजते वाचा नालोक्यां तामुदारयेत्॥ १६१
सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा॥ १६२

सुखं ह्यवमतः शेते सुखञ्च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ १६३
अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः ।
गुरौ वसन् सञ्चिनुयाद्ब्रह्माधिगमिकं तपः ॥ १६४
तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ १६५
वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ १६६
आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ १६७
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १६८
मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९
तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते ॥ १७०
वेदप्रदानादाचार्य्यं पितरं परिचक्षते ।
न ह्यस्मिन् युज्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ॥ १७१
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२
कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम् ॥ १७३
यद्यस्य विहितं चर्म्म यत् सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १७५
नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्च्चनञ्चैव समिदाधानमेव च ॥ १७६
वर्ज्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि यानि सर्व्वाणि प्राणिनां चैव हिंसनम् ॥ १७७
अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधञ्च लोभंच नर्त्तनं गीतवादनम् ॥ १७८
द्यूतंच जनवादंच परिवादं तथानृतम् ।
स्त्रीणांच प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९
एकः शयीत सर्व्वत्र न रेतः स्कन्दयेत् क्वचित् ।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥ १८०
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपेत् ॥ १८१
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।
आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत् ॥ १८२
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत् ॥ १८४
सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत् । १८५
दूरादाहृत्य समिधः संनिदध्याद्विहायसि ।
सायम्प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः ॥ १८६

अकृत्वा भैक्षचरणमसमिध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥ १८७
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता॥ १८८
व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत्।
काममभ्यर्थितोऽश्नीयात् व्रतमस्य न लुप्यते॥ १८९
ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः।
राजन्यवैश्ययोस्त्वेवं नैतत् कर्म विधीयते॥ १९०
चोदितो गुरुणा नित्यमप्रचोदित एव वा।
कुर्य्यादध्ययने यत्नमाचार्य्यस्य हितेषु च॥ १९१
शरीरंचैव वाचञ्च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम्॥ १९२
नित्यमुद्धृतपाणिः स्यात् साध्वाचारः सुसंयतः।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः॥ १९३
हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ।
उत्तिष्ठेत् प्रथमंचास्य चरमंचैव संविशेत्॥ १९४
प्रतिश्रवणसम्भाषे शयानो न समाचरेत्।
नासीनो न च भुञ्जानो न तिष्ठन् न पराङ्मुखः॥ १९५
आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः॥ १९६
पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम्।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः॥ १९७
नीचं शय्यासनंचास्य सर्वदा गुरुसन्निधौ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्॥ १९८

नोदाहरेदस्य नाम परोक्षमपि केवलम्।
नचैवास्यानुकुर्वीत गतिभाषितचेष्टितम्॥ १९९

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥ २००

परीवादात् खरो भवति श्वा वै भवति निन्दकः।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी॥ २०१

दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत्॥ २०२

प्रतिवातेऽनुवाते च नासीत गुरुणा सह।
असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत्॥ २०३

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च॥ २०४

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्॥ २०५

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु।
प्रतिषेधत्सु चाधर्म्मात् हितं चोपदिशत्स्वपि॥ २०६

श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्।
गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु॥ २०७

बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति॥ २०८

उत्सादनंच गात्राणां स्नापनोच्छिष्टभोजने।
न कुर्य्याद्गुरुपुत्रस्य पादयोश्चावनेजनम्॥ २०९

गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः॥ २१०

अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ २११
गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२
स्वभाव एष नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३
अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४
मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५
कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन् ॥ २१६
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ २१७
यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ।
नैनं ग्रामेऽभिनिम्लोचेत् सूर्य्यो नाभ्युदियात् क्वचित् ॥ २१९
तं चेदभ्युदियात् सूर्य्यः शयानं कामचारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२०
सूर्य्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः ।
प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥ २२१
आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपं जप्यमुपासीत यथाविधि ॥ २२२

यदि स्त्री यद्यवरजः श्रेयः किंचित् समाचरेत्।
तत् सर्व्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः॥ २२३
धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्म्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥ २२४
आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः।
माता पृथिव्या मूर्त्तिस्तु भ्राता स्वो मूर्त्तिरात्मनः॥ २२५
आचार्य्यश्च पिता चैव माता भ्राता च पूर्व्वजः।
नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः॥ २२६
यत् मातापितरौ क्लेशं सहेते सम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि॥ २२७
तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्व्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सर्व्वं समाप्यते॥ २२८
तेषां त्रयाणां शुश्रूषा परमन्तप उच्यते।
न तैरभ्यननुज्ञातो धर्म्ममन्यं समाचरेत्॥ २२९
त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः॥ २३०
पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी॥ २३१
त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्गृही।
दीप्यमानः स्ववपुषा देववद्दिवि मोदते॥ २३२
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते॥ २३३
सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः॥ २३४

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः॥ २३५
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः॥ २३६
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते।
एष धर्म्मः परः साक्षादुपधर्म्मोऽन्य उच्यते॥ २३७
श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि॥ २३८
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्॥ २३९
स्त्रियो रत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्वतः॥ २४०
अब्राह्मणादध्ययनमापत्काले विधीयते।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥ २४१
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम्॥ २४२
यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले।
युक्तः परिचरेदेनमाशरीरविमोक्षणात्॥ २४३
आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥ २४४
न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्म्मवित्।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥ २४५
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।
धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्॥ २४६

आचार्य्ये तु खलु प्रेते गुरुपुत्त्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७
एतेष्वविद्यमानेषु स्थानासनविहारवान ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४८
एवञ्चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः ।
स गच्छत्युत्तमं स्थानं न चेह जायते पुनः ॥ २४९

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां
संहितायां द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् ।
तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥ १
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम ।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममावसेत् ॥ २
तं प्रतीतं स्वधर्म्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥ ३
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ॥ ४
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥ ५
महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत् ॥ ६

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ ७
नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥ ८
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥ ९
अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ १०
यस्यास्तु न भवेद्भ्राता न विज्ञायते वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्म्मशङ्कया ॥ ११
सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवराः ॥ १२
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ १३
न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते ॥ १४
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ १५
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ १६
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥ १७
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु।
नाश्नन्ति पितृदेवास्तंना च स्वर्गं स गच्छति ॥ १८

वृषलीफेनपीतस्य निःश्वासोपहतस्य च।
तस्यांचैव प्रसूतस्य निष्कृतिर्न विधीयते॥ १९
चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत॥ २०
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥ २१
यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान्॥ २२
षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्॥ २३
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः॥ २४
पंचानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन॥ २५
पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥ २६
आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयं।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः॥ २७
यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते॥ २८
एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते॥ २९
सहोभौ चरतां धर्ममिति वाचानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥ ३०

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते॥ ३१
इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्व्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥ ३२
हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते॥ ३३
सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः॥ ३४
अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते।
इतरेषान्तु वर्णानामितरेतरकाम्यया॥ ३५
यो यस्यैषां विवाहानां मनुना कीर्त्तितो गुणः।
सर्व्वं शृणुत तं विप्राः सम्यक् कीर्त्तयतो मम॥ ३६
दश पूर्व्वान् परान् वंश्यानात्मानञ्चैकविंशकम्।
ब्राह्मीपुत्त्रः सुकृतकृन्मोचयत्येनसः पितॄन्॥ ३७
दैवोढ़ाजः सुतश्चैव सप्त सप्त परावरान्।
आर्षोढ़ाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढ़जः सुतः॥ ३८
ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्व्वशः।
ब्रह्मवर्च्चस्विनः पुत्त्रा जायन्ते शिष्टसम्मताः॥ ३९
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः।
पर्य्याप्तभोगा धर्म्मिष्ठा जीवन्ति च शतं समाः॥ ४०
इतरेषु तु शिष्टेषु नृशंसानृतवादिनः।
जायन्ते दुर्व्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः॥ ४१
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्॥ ४२

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥ ४३
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥ ४४
ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया॥ ४५
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः॥ ४६
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः॥ ४७
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ ४८
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।
समेऽपुमान् पुंस्त्रियो वा क्षीणेऽल्पे च विपर्य्ययः॥ ४९
निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्ज्जयन्।
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन्॥ ५०
न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि।
गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी॥ ५१
स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः।
नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम्॥ ५२
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः॥ ५३
यासां नाददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणं तत् कुमारीणामानृशंस्यञ्च केवलम्॥ ५४

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ५५
यत्र नार्य्यास्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः ॥ ५६
शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम्।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा ॥ ५७
जामयो यानि गेहानि शपन्त्यप्रति पूजिताः।
तानि कृत्याहतानीव विनश्यंति समन्ततः ॥ ५८
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ५९
सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ६०
यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्।
अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते ॥ ६१
स्त्रियान्तु रोचमानायां सर्व्वं तद्रोचते कुलम्।
तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते ॥ ६२
कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ६३
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥ ६४
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम्।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥ ६५
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि।
कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः ॥ ६६

यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्।
तत्तत् कार्य्यं निवर्त्तेत कृतंचाप्यकृतं भवेत्॥ ११७
लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते॥ ११८
एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्।
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः॥ ११९
लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्वन्तु साहसम्।
भयाद्द्वौ मध्यमौ दण्ड्यौ मैत्रात् पूर्वं चतुर्गुणम्॥ १२०
कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु॥ १२१
एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च॥ १२२
कौटसाक्ष्यन्तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्॥ १२३
दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत्॥ १२४
उपस्थमुदरं जिह्वा हस्तौ पादौ च पंचमम्।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥ १२५
अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्॥ १२६
अधर्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।
अस्वर्ग्यंच परत्रापि तस्मात् तत् परिवर्जयेत्॥ १२७
अदण्ड्यान् दण्डयन राजा दण्ड्यांश्चैवाप्यदण्डयन।
अयशोमहदाप्नोति नरकंचैव गच्छति॥ १२८

वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डन्तु वधदण्डमतः परम् ॥ १२९
वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् ।
तदैषु सर्वमप्येतं प्रयुञ्जीत चतुष्टयम् ॥ १३०
लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥ १३१
जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमन्तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ १३२
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयोगौरसर्षपः ॥ १३३
सर्षपाः षट् यवोमध्यस्त्रियवन्त्वेककृष्णलम् ।
पंचकृष्णलकोमाषस्ते सुवर्णस्तु षोड़श ॥ १३४
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥ १३५
ते षोड़श स्याद्धरणं पुराणंचैव राजतम् ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥ १३६
धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसौवर्णिकोनिष्को विज्ञेयस्तु प्रमाणतः ॥ १३७
पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पंच विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥ १३८
ऋणे देये प्रतिज्ञाते पंचकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥ १३९
वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् ।
अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते ॥ १४०

द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन् ।
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ॥ १४१
द्विकन्त्रिकंचतुष्कंच पंचकंच शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ १४२
न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ॥ १४३
न भोक्तव्योबलादाधिर्भुञ्जानोवृद्धिमुत्सृजेत् ।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ १४४
आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्य्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥ १४५
सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रोवहन्नश्वोयश्च दम्यः प्रयुज्यते ॥ १४६
यत् किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ १४७
अजड़श्चेदपोगण्डो विषये चास्य भुज्यते ।
भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८
आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥ १४९
यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः ।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥ १५०
कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
धान्ये सदे लवे वाह्ये नातिक्रामति पंचताम् ॥ १५१
कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति ।
कुसीदपथमाहुस्तं पंचकं शतमर्हति ॥ १५२

नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत्।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या॥ १५३

ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम्।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत्॥ १५४

अदर्शयित्वा तत्रैव हिरन्यं परिवर्त्तयेत्।
यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति॥ १५५

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः।
अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात्॥ १५६

समुद्रयानकुशला देशकालार्थदर्शिनः।
स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति॥ १५७

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः।
अदर्शयन् स तं तस्य प्रयच्छेत् स्वधनादृणम्॥ १५८

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकंच यत्।
दण्डशुल्कावशेषंच न पुत्रोदातुमर्हति॥ १५९

दर्शनप्रातिभाव्ये तु विधिः स्यात् पूर्वचोदितः।
दानप्रतिभुवि प्रेते दायादानपि दापयेत्॥ १६०

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्।
पश्चात् प्रतिभुवि प्रेते परीप्सेत् केन हेतुना॥ १६१

नरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः।
स्वधनादेव तद्दद्यान्निरादिष्टइति स्थितिः॥ १६२

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति॥ १६३

सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यवहारिकात्॥ १६४

योगाधमनविक्रीतं योगदानप्रतिग्रहम्।
यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत्॥ १६५
ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतोव्ययः।
दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः॥ १६६
कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्।
स्वदेशे वा विदेशे वा तं ज्यायान विचालयेत्॥ १६७
बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्॥ १६८
त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्।
चत्वारस्तूपचीयन्ते विप्रआढ्योवणिङ्नृपः॥ १६९
अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः।
नचादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत्॥ १७०
अनादेयस्य चादानादादेयस्य च वर्जनात्।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति॥ १७१
स्वादानाद्वर्णसंसर्गात्त्वबलानाञ्च रक्षणात्।
बलं सञ्जायते राज्ञः स प्रेत्येह च वर्द्धते॥ १७२
तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये।
वर्त्तेत याम्यया वृत्त्या जितक्रोधोजितेन्द्रियः॥ १७३
यस्त्वधर्मेण कार्य्याणि मोहात् कुर्य्यान्नराधिपः।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः॥ १७४
कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः॥ १७५
यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे।
स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम्॥ १७६

अर्थेऽप्यपि समं कुर्य्यान्निजावाधमर्णिक:।
समोऽवक्रष्टजातिस्तु दद्याच्छ्रेयांस्तु तत्कृते:॥ १७७
अनेन विधिना राजा मिथोविवदतां नृणाम्।
साक्षिप्रत्ययसिद्धानि कार्य्याणि समतां नयेत्॥ १७८
कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि।
महापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद्बुध:॥ १७९
यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानव:।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रह:॥ १८०
यो निक्षेपं याच्यमानोनिक्षेप्तुर्न प्रयच्छति।
स याच्य: प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ॥ १८१
साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितै:।
अपदेशैश्च संन्यस्य हिरण्यं तस्य तत्त्वत:॥ १८२
स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्।
न तत्र विद्यते किंचिद्यत् परैरभियुज्यते॥ १८३
तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि।
उभौ निगृह्य दाप्य: स्यादिति धर्मस्य धारणा॥ १८४
निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे।
नश्यतोविनिपाते तावनिपाते त्वनाशिनौ॥ १८५
स्वयमेव तु योदद्यान्मृतस्य प्रत्यनन्तरे।
न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभि:॥ १८६
अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम्।
विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥ १८७
निक्षेपेष्वेषु सर्वेषु विधि: स्यात् परिसाधने।
समुद्रे नाप्नुयात् किंचिद्यदि तस्मान्न संहरेत्॥ १८८

चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा।
न दद्याद्यदि तस्मात् स न संहरति किंचन॥ १८९
निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः॥ १९०
योनिक्षेपं नार्पयति यश्चानिक्षिप्य याचते।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम्॥ १९१
निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम्।
तथोपनिधिहर्त्तारमविशेषेण पार्थिवः॥ १९२
उपधाभिश्च यः कश्चित् परद्रव्यं हरेन्नरः।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः॥ १९३
निक्षेपो यः कृतोयेन यावांश्च कुलसन्निधौ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति॥ १९४
मिथोदायः कृतोयेन गृहीतोमिथएव वा।
मिथएव प्रदातव्योयथा दायस्तथा ग्रहः॥ १९५
निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च।
राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणम्॥ १९६
विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः।
न तन्नयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम्॥ १९७
अवहार्य्योभवेच्चैव सान्वयः षट् शतं दमम्।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम्॥ १९८
अस्वामिना कृतोयस्तु दायोविक्रय एव वा।
अकृतः स तु विज्ञेयोव्यवहारे यथा स्थितिः॥ १९९
सम्भोगोदृश्यते यत्र न दृश्येतागमः क्वचित्।
आगमः कारणं तत्र न सम्भोग इति स्थितिः॥ २००

विक्रयाद्योधनं किंचिद्गृह्णीयात् कुलसन्निधौ।
क्रयेण स विशुद्धं हि न्यायतोलभते धनम्॥ २०१
अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः।
अदण्ड्योमुच्यते राज्ञा नाष्टिकोलभते धनम्॥ २०२
नान्यदन्येन संसृष्टरूपं विक्रयमर्हति।
न च सारं न च न्यूनं न दूरे न तिरोहितम्॥ २०३
अन्यांचेद्दर्शयित्वान्या वोढ़ुः कन्या प्रदीयते।
उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः॥ २०४
नोन्मत्ताया न कुष्ठिन्या न च या स्पृष्टमैथुना।
पूर्वं दोषानभिख्याप्य प्रदाता दण्डमर्हति॥ २०५
ऋत्विग् यदि वृतोयज्ञे स्वकर्म परिहापयेत्।
तस्य कर्मानुरूपेण देयोऽंशः सह कर्त्तृभिः॥ २०६
दक्षिणासु च दत्तासु स्वकर्म परिहापयन्।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत्॥ २०७
यस्मिन् कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः।
सएव ता आददीत भजेरन् सर्व एव वा॥ २०८
रथं हरेत चाध्वर्य्युर्ब्रह्माधाने च वाजिनम्।
होता वापि हरेदश्वमुद्गाता चाप्यनः क्रये॥ २०९
सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः॥ २१०
सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः।
अनेन विधियोगेन कर्त्तव्यांशप्रकल्पना॥ २११
धर्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम्।
पश्चाच्च न तथा तत् स्यान्न देयं तस्य तद्भवेत्॥ २१२

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥ २१३
दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया ।
अतऊर्द्ध्वं प्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥ २१४
भृतो नार्त्तोन कुर्य्याद्यो दर्पात् कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ २१५
आर्त्तस्तु कुर्य्यात् स्वस्थः सन् यथाभाषितमादितः ।
सदीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥ २१६
यथोक्तमार्त्तः स्वस्थोवा यस्तत् कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥ २१७
एष धर्मोऽखिलेनोक्तो वेतनादानकर्मणः ।
अतऊर्द्ध्वं प्रवक्ष्यामि धर्मं समयभेदिनाम् ॥ २१८
योग्रामदेशसंघानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरोलोभात्तं राष्ट्राद्विप्रवासयेत् ॥ २१९
निगृह्य दापयेच्चैनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् षड्निष्कांश्छतमानंच राजतम् ॥ २२०
एतं दण्डविधिं कुर्य्याद्धार्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥ २२१
क्रीत्वा विक्रीय वा किंचिद् यस्येहानुशयोभवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा २२२
परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानोददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥ २२३
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य कुर्य्यान्नृपोदण्डं स्वयं षण्णवतिं पणान् ॥ २२४

अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ २२५
पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाकन्यासु क्वचित् नृणां लुप्तधर्म्मक्रिया हि ताः ॥ २२६
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ २२७
यस्मिन् यस्मिन् कृते कार्य्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥ २२८
पशुषु स्वामिनां चैव पालानांच व्यतिक्रमे ।
विवादं सम्प्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥ २२९
दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥ २३०
गोपः क्षीरभृतोयस्तु स दुह्याद्दशतोवराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः ॥ २३१
नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्यात् पाल एव तु ॥ २३२
विघुष्य तु हृतं चौरै र्न पालो दातुमर्हति ।
यदि देशेच कालेच स्वामिनः स्वस्य शंसति ॥ २३३
कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम् ।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्कानि दर्शयेत् ॥ २३४
अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृकोहन्यात् पाले तत् किल्विषं भवेत् ॥ २३५
तासांचेदवरुद्धानां चरन्तीनां मिथोवने ।
यामुत्प्लुत्य वृकोहन्यान्न पालस्तत्र किल्विषी ॥ २३६

धनुःशतं परीहारोग्रामस्य स्यात् समन्ततः।
शम्यापातास्त्रयोवापि त्रिगुणोनगरस्य तु ॥ २३७
तत्रापरिवृतं धान्यं विहिंस्युः पशवोयदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥
वृतिं तत्र प्रकुर्वीत यामुष्ट्रोन विलोकयेत्।
छिद्रंच वारयेत् सर्वं श्वशूकरमुखानुगम् ॥
पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः।
सपालः शतदण्डार्होविपालान् वारयेत् पशून् ॥
क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति।
सर्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा ॥
अनिर्दशाहां गां सूतां वृषान्देवपशूं स्तथा।
सपालान् वा विपालान् वा न दण्ड्यान्मनुरब्रवीत् ॥
क्षेत्रिकस्यात्यये दण्डोभागाद्दशगुणोभवेत्।
ततोऽर्द्धदण्डोभृत्यानामज्ञानात् क्षेत्रिकस्य तु ॥
एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः।
स्वामिनांच पशूनांच पालानांच व्यतिक्रमे ॥
सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः।
ज्यैष्ठे मासि नयेत् सीमां सुप्रकाशेषु सेतुषु ॥
सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानिच।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥
तड़ागान्युदपानानि वाप्यः प्रस्रवणानिच।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥ २४८

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥ २४९
अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः ।
करीषमिष्टकाङ्गारांश्छर्करा वालुकास्तथा ॥
यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥
एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः ।
पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥
यदि संशय एव स्यात् लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः ॥
ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमालिङ्गानि यतोश्चैव विवादिनोः ॥
ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥
शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥
यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥
साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः ।
सीमाविनिर्णयं कुर्य्युः प्रयताराजसन्निधौ ॥
सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ॥
व्याधाञ्छाकुनिकान् गोपान् कैवर्त्तान्मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ॥ २६०

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः॥ २६१
क्षेत्रकूपतड़ागानामारामस्य गृहस्य च।
सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम्।
सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम्॥
गृहं तड़ागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पंच दण्ड्यः स्यादज्ञानाद्द्विशतोदमः॥
सीमायामविषह्यायां स्वयं राजैव धर्मवित्।
प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः॥
एषोऽखिलेनाभिहितो धर्मः सीमाविनिर्णये।
अत ऊर्द्ध्वं प्रवक्ष्यामि वाक्पारुष्य विनिर्णयम्॥
शतं ब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति।
वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति॥
पंचाशद्ब्राह्मणोदण्ड्यः क्षत्रिय आभिशंसने।
वैश्यः स्यादर्द्धपंचाशच्छूद्रे द्वादशकोदमः॥
समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे।
वादेष्ववचनीयेषु च तदेव द्विगुणं भवेत्॥
एकजातिर्द्विजातीं स्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवोहि सः॥
नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः।
निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥
धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥ २७२

श्रुतं देशंच जातिंच कर्म्म शारीरमेवच।
वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥ २७३
काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम्।
तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरम् ॥
मातरं पितरं जायां भ्रातरं तनयं गुरुम।
आक्षारयञ्छतं दाप्यः पन्थानं चाददद्गुरोः ॥
ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्योविजानता।
ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥
विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः।
छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः ॥
एष दण्डविधिः प्रोक्तोवाक्पारुष्यस्य तत्त्वतः।
अत ऊर्द्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयम् ॥
येन केनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः।
कट्यां कृताङ्कोनिर्वास्यः स्फिचं वास्यावकर्त्तयेत् ॥
अवनिष्ठीवतोदर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः।
अवमूत्रयतोमेढ्रमवशर्द्धयतोगुदम्।
केशेषु गृह्णतोहस्तौ छेदयेदविचारयन्।
पादयोर्दाढिकायांच ग्रीवायां वृषणेषु च ॥
त्वग्भेदकः शतं दण्ड्योलोहितस्य च दर्शकः।
मांसभेत्ता तु षण्निष्कान् प्रवास्यस्त्वस्थिभेदकः ॥ २८४

वनस्पतीनां सर्वेषामुपभोगोयथा यथा ।
तथा,तथा दम: कार्य्योहिंसायामिति धारणा ॥ २८५

मनुष्याणां पशूनांच दु:खाय प्रहृते सति ।
यथा यथा महद्दु:खं दण्डं कुर्य्यात्तथा तथा ॥

अङ्गावपीड़नायांच व्रणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्य: सर्वदण्डमथापि वा ॥

द्रव्याणि हिंस्याद्योयस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञोदद्याच्च तत्समम् ॥

चर्म्मचार्म्मिक भाण्डेषु काष्ठलोष्टमयेषु च ।
मूल्यात् पंचगुणोदण्ड: पुष्पमूलफलेषु च ॥

यानस्य चैव यातुश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहु: शेषे दण्डोविधीयते ॥

छिन्ननास्ये भग्नयुगे तिर्य्यक् प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥

छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥

यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य तु ।
तत्र स्वामि भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

प्राजकश्चेद्भवेदाप्त: प्राजकोदण्डमर्हति ।
युग्यस्था: प्राजकेऽनाप्ते सर्वे दण्ड्या: शतं शतम् ॥

स चेत्तु पथि संरुद्ध: पशुभिर्वा रथेन वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारित: ॥

मनुष्यमारणे क्षिप्रं चौरवत् किल्विषं भवेत् ।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥ २९६

क्षुद्रकाणां पशूनान्तु हिंसायां द्विशतोदमः॥
पंचाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥ २९७
गर्द्दभाजाविकानान्तु दण्डः स्यात् पंचमाषिकः।
माषकस्तु भवेद्दण्डः श्वसूकरनिपातने॥
भार्य्या पुत्रश्च दासश्च शिष्योभ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम्॥
एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः।
स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णये॥
परमं यत्नमातिष्ठेत् स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशोराष्ट्रंच वर्द्धते॥
अभयस्य हि योदाता संपूज्यः सततं नृपः।
सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम्॥
सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागोभवत्यस्य ह्यरक्षतः॥
यदधीते यद्यजते यद्ददाति यदर्च्चति।
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्॥
रक्षन् धर्मेण भूतानि राजा बध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥
योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रतिभागंच दण्डंच स सद्योनरकं व्रजेत्॥
अरक्षितारं राजानं बलिषड्भागहारिणम्।
तमाहुः सर्वलोकस्य समग्रमलहारकम्॥ ३०८

अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम्।
अरक्षितारमत्तारं नृपं विद्यादधोगतिम्॥ ३०९
अधार्म्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः।
निरोधनेन बन्धेन विविधेन बधेन च॥
निग्रहेण हि पापानां साधूनां संग्रहेण च।
द्विजातयइवेज्याभिः पूयन्ते सततं नृपाः॥
क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम्।
बालवृद्धातुराणांच कुर्वता हितमात्मनः॥
यः क्षिप्तोमर्षयत्यार्त्तैस्तेन स्वर्गे महीयते।
यस्त्वैश्वर्य्यान्न क्षमते नरकन्तेन गच्छति॥
राजा स्तेनेन गन्तव्योमुक्तकेशेन धावता।
आचक्षाणेन तत् स्तेयमेवङ्कर्म्मास्मि शाधि माम्॥
स्कन्धेनादाय मुषलं लगुडं वापि खादिरम्।
शक्तिंचोभयतस्तीक्ष्णामायसं दण्डमेव वा॥
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते।
अशासित्वा तु तंराजा स्तेनस्याप्नोति किल्विषम्॥
अन्नादेभ्रूणहा मार्ष्टिपत्यौ भार्य्यापचारिणी।
गुरौशिष्यश्च याज्यश्च स्तेनोराजनि किल्विषम्॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनोयथा॥
यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्।
स दण्डं प्राप्नुयान्माषं तंच तस्मिन् समाहरेत्॥
धान्यं दशभ्यः कुम्भेभ्योहरतोऽभ्यधिकं बधः।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम्॥ ३२०

तथा धरिममेयानां शतादभ्यधिके बधः।
सुवर्णरजतादीनामुत्तमानांच वाससाम्॥ २२१
पंचाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते।
शेषे त्वेकदशगुणं मूल्याद्दण्डं प्रकल्पयेत्॥
पुरुषाणां कुलीनानां नारीणांच विशेषतः।
मुख्यानांचैव रत्नानां हरणे बधमर्हति॥
महापशूनां हरणे शस्त्राणामौषधस्य च।
कालमासाद्य कार्य्यंच दण्डं राजा प्रकल्पयेत्॥
गोषु ब्राह्मणसंस्थासु छुरिकायाश्च भेदने।
पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः॥
सूत्रकार्पासकिण्वानां गोमयस्य गुड़स्य च।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च॥
वेणुवैदलभाण्डानां लवणानां तथैवच।
मृण्मयानांच हरणे मृदोभस्मनएव च॥
मत्स्यानां पक्षिणांचैव तैलस्य च घृतस्य च।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम्॥
अन्येषांचैवमादीनां मद्यानामोदनस्य च।
पक्वान्नानांच सर्व्वेषां तन्मूल्याद्द्विगुणोदमः॥
पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च।
अन्येष्वपरिपूतेषु दण्डः स्यात् पंचकृष्णलः॥
परिपूतेषु धान्येषु शाकमूलफलेषु च।
निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः॥
स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम्।
निरन्वयं भवेत् स्तेयं हृत्वापह्नूयते च यत्॥ २२२

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः।
तमाद्यं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात्॥ ३३३
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते।
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः॥
पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति॥
कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतोजनः।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥
अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्विषम्।
षोड़शैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः॥
वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च।
तृणञ्च गोभ्योग्रासार्थमस्तेयं मनुरब्रवीत्॥
योऽदत्तादायिनोहस्ताल्लिप्सेत ब्राह्मणोधनम्।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥
द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति॥
असन्धितानां सन्धाता सन्धितानाञ्च मोक्षकः।
दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्विषम्॥
अनेन विधिना राजा कुर्वाणः स्तेननिग्रहम्।
यशोऽस्मिन् प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखम्॥
ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्।
नोपेक्षेत क्षणमपि राजा साहसिकं नरम्॥ ३४४

वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः।
साहसस्य नरः कर्त्ता विज्ञेयः पापकृत्तमः॥ ३४५
साहसे वर्त्तमानन्तु योमर्षयति पार्थिवः।
स विनाशं व्रजत्याशु विद्वेषञ्चाधिगच्छति॥
न मित्रकारणाद्राजा विपुलाद्वा धनागमात्।
समुत्सृजेत् साहसिकान् सर्वभूतभयावहान्॥
शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते।
द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्म्मेण न दुष्यति॥
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥
नाततायिवधे दोषोहन्तुर्भवति कश्चन।
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति॥
परदाराभिमर्षेषु प्रवृत्तान् नॄन् महीपतिः।
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्॥
तत्समुत्थोहि लोकस्य जायते वर्णसङ्करः।
येन मूलहरोऽधर्मः सर्वनाशाय कल्पते॥
परस्य पत्न्या पुरुषः सम्भाषां योजयन् रहः।
पूर्वमाक्षारितोदोषैः प्राप्नुयात् पूर्वसाहसम्॥
यस्त्वनाक्षारितः पूर्वमभिभाषित कारणात्।
न दोषं प्राप्नुयात् किञ्चिन्न हि तस्य व्यतिक्रमः॥
परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा।
नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात्॥ ३५६

उपचारक्रिया केलिः स्पर्शोभूषणवाससाम् ।
सहखट्वासनञ्चैव सर्वं संग्रहणं स्मृतम् ॥ ३५७
स्त्रियं स्पृशेददेशे यः स्पृष्टोवा मर्षयेत्तया ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारारक्ष्यतमाः सदा ॥
भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं सह स्त्रीभिः कुर्य्युरप्रतिवारिताः ॥
न सम्भाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धोभाषमाणस्तु सुवर्णं दण्डमर्हति ॥
नैष चारणदारेषु विधिर्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥
किंचिदेव तु दाप्यः स्यात् सम्भाषां ताभिराचरन्
प्रेष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥
योऽकामां दूषयेत् कन्यां स सद्योवधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥
कन्यां भजन्तीमुत्कृष्टं न किंचिदपिदापयेत् ।
जघन्यं सेवमानन्तु संयतां वासयेद्गृहे ॥
उत्तमां सेवमानन्तु जघन्योवधमर्हति ।
शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि ॥
अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः ।
तस्याशु कर्त्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥
सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् ।
द्विशतन्तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥ ३६८

कन्यैव कन्यां या कुर्य्यात्तस्याः स्याद्विशतोदमः। ३८
शुल्कंच द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश॥
या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो मौण्ड्यमर्हति।
अङ्गुल्योरेव च च्छेदं खरेणोद्वहनन्तथा॥
भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥
पुमांसं दाहयेत् पापं शयने तप्त आयसे।
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत्॥
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणोदमः।
व्रात्यया सह संवासे चाण्डाल्या तावदेव तु॥
शूद्रोगुप्तमगुप्तं वा द्वैजातं वर्णमावसन्।
अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते॥
वैश्यः सर्वस्वदण्डः स्यात् संवत्सरनिरोधतः।
सहस्रं क्षत्रियोदण्ड्यो मौण्ड्यं मूत्रेण चार्हति॥
ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ।
वैश्यं पंचशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणम्॥
उभावपि तु तावेव ब्राह्मण्या गुप्तया सह।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना॥
सहस्रं ब्राह्मणोदण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।
शतानि पंच दंड्यः स्यादिच्छन्त्या सह सङ्गतः॥
मौंड्यं प्राणान्तिकोदंडोब्राह्मणस्य विधीयते।
इतरेषान्तु वर्णानां दंडः प्राणान्तिकोभवेत्॥
न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्।
राष्ट्रादेनं वहिः कुर्य्यात् समग्रधनमक्षतम्॥ ३८०

न ब्राह्मणवधाद्भूयानधर्मोविद्यते भुवि ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥ ३८१
वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियोव्रजेत् ।
योब्राह्मण्यामगुप्तायां तावुभौ दंडमर्हतः ॥
सहस्रं ब्राह्मणोदंडं दाप्योगुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥
क्षत्रियायामगुप्तायां वैश्ये पंचशतं दमः ।
मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियोदण्डमेव वा ॥
अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणोव्रजन् ।
शतानि पंच दण्ड्यः स्यात् सहस्रं त्वन्त्यजस्त्रियम् ॥
यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥
एतेषां निग्रयोराज्ञः पंचानां विषये स्वके ।
साम्राज्यकृत् सजात्येषु लोके चैव यशस्करः ॥
ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टंच तयोर्दंडः शतंशतम् ॥
न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेत्राज्ञा दंड्यः शतानि षट् ॥
आश्रमेषु द्विजातिनां कार्य्ये विवदतां मिथः ।
न विब्रूयान्नृपोधर्मं चिकीर्षन् हितमात्मनः ॥
यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥
प्रतिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हाविभोजयन्विप्रोदंडमर्हति माषकम् ॥ ३८२

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन्।
तदन्नं द्विगुणं दाप्यो हिरण्यंचैव माषकम्॥ ३९२
अन्धो जड़ः पीठसर्पी सप्तत्या स्थविरश्च यः।
श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित् करम्॥
श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिंचनम्।
महाकुलीनमार्य्यञ्च राजा संपूजयेत् सदा॥
शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्॥
तन्तुवायोदशपलं दद्यादेकपलाधिकम्।
अतोऽन्यथावर्त्तमानो दाप्योद्वादशकं दमम्॥
शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः।
कुर्य्युरर्घं यथा पण्यं ततोविंशं नृपोहरेत्॥
राज्ञः प्रख्यातभांडानि प्रतिषिद्धानि यानिच।
तानि निर्हरतोलोभात् सर्वहारं हरेन्नृपः॥
शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी।
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्॥
आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य्य सर्वपण्यानां कारयेत् क्रयविक्रयौ॥
पंचरात्रे पंचरात्रे पक्षे पक्षेऽथवा गते।
कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥
तुलामानं प्रतीमानं सर्वंच स्यात् सुलक्षितम्।
षट्सु षट्सुच मासेषुपुनरेव परीक्षयेत्॥
पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्॥ ४०४

भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः।
रिक्तभाण्डानि यत्किंचित् पुमांसश्चापरिच्छदाः॥ ४०५
दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्।
नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम्॥
गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे॥
यन्नावि किंचिद्दाशानां विशीर्य्येतापराधतः।
तद्दाशैरेव दातव्यं समागम्य स्वतोऽंशतः॥
एष नौयायिनामुक्तो व्यवहारस्य निर्णयः।
दाशापराधतस्तोये दैविके नास्ति निग्रहः॥
वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च।
पशूनां रक्षणञ्चैव दास्यं शूद्रं द्विजन्मनाम्॥
क्षत्रियंचैव वैश्यंच ब्राह्मणो वृत्तिकर्षितौ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयन्॥
दास्यन्तु कारयल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्॥
शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा॥
न स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति॥
ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः॥
भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥ ४१६

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत्।
न हि तस्यास्ति किंचित् स्वं भर्तृहार्य्यधनो हि सः॥४१७

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत्।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत्॥

अहन्यहन्यवेक्षेत कर्मान्तान् वाहनानि च।
आयव्ययौ च नियतावाकरान् कोषमेव च॥

एवं सर्वानिमान् राजा व्यवहारान् समापयन्।
व्यपोह्य किल्विषं सर्वं प्राप्नोति परमां गतिम्॥४२०

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां
संहितायामष्टमोऽध्यायः॥८

---

## नवमोऽध्यायः।

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।
संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान्॥

अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्।
विषये सज्जन्त्यः संस्थाप्या आत्मनो वशे॥

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥

कालेऽदाता पिता वाच्योवाच्यश्चानुपयन् पतिः॥
मृते भर्त्तरि पुत्रस्तु वाच्योमातुररक्षिता॥

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियोरक्ष्या विशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥५

इमं हि सर्ववर्णानां पश्यन्तोधर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्य्यां भर्त्तारोदुर्बला अपि ॥ ६
स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वंच धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥
पतिर्भार्य्यां संप्रविश्य गर्भोभूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥
यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः ॥
न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे ॥
अरक्षितागृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥
नैतारूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ।
रक्षितायत्नतोऽपीह भर्त्तृष्वेताविकुर्वते ॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत् पुरुषोरक्षणं प्रति ॥
शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् ॥ १७

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मे व्यवस्थितः।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥ १८

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता।
तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम्॥
ध्यायत्यनिष्टं यत्किंचित् पाणिग्राहस्य चेतसा।
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते॥
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा॥
अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्॥
एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः।
उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः॥
एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा।
प्रेत्येह च सुखोदर्कान् प्रजाधर्मान्निबोधत॥
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन॥
उत्पादनमपत्यस्य जातस्य परिपालनम्।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम्॥
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह॥
पतिं या नाभिचरति मनोवाग्देहसंयता।
सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते॥ २९

व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।
शृगालयोनिं वाप्नोति पापरोगैश्च पीड्यते॥ ३०
पुत्रं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत॥
भर्त्तुः पुत्रं विजानन्ति श्रुतिद्वैधन्तु भर्त्तरि।
आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः॥
क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्।
क्षेत्रबीजसमायोगात् सम्भवः सर्वदेहिनाम्॥
विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित्।
उभयन्तु समं यत्र सा प्रसूतिः प्रशस्यते॥
बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते।
तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः॥
इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते।
न च योनिगुणान् कांश्चिद्बीजं पुष्यति पुष्टिषु॥
भूमावप्येककेदारे कालोप्तानि कृषीवलैः।
नानारूपाणि जायन्ते बीजानीह स्वभावतः॥
व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः।
यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा॥
अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति॥
तत् प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना।
आयुष्कामेण वप्तव्यं न जातु परयोषिति॥ ४१

अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः।
यथा बीजं न वप्तव्यं पुंसा परपरिग्रहे॥ ४२
नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः।
तथा नश्यति वै क्षिप्रं बीजं परपरिग्रहे॥
पृथोरपीमां पृथिवीं भार्य्यां पूर्वविदो विदुः।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम्॥
एतावानेव पुरुषो यज्जायात्मा प्रजेति ह।
विप्राः प्राहुस्तथा चैतद्यो भर्त्ता सा स्मृताङ्गना॥
न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते।
एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम्॥
सकृदंशो निपतति सकृत् कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत्॥
यथा गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि॥
येऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित्॥
यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्॥
तथैवाक्षेत्रिणोबीजं परक्षेत्रप्रवापिणः।
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥
फलन्त्वनभिसन्धाय क्षेत्रिणां बीजिनान्तथा।
प्रत्यक्षं क्षेत्रिनामर्थोबीजाद्योनिर्गरीयसी॥
क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिकएव च॥ ५२

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति।
क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम्॥ ५४

एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च।
विहङ्गमहिषीणां च विज्ञेयः प्रसवं प्रति॥

एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्त्तितम्।
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि॥

भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य सा।
यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा स्मृता॥

ज्येष्ठोयवीयसोभार्य्यां यवीयान् वाग्रजस्त्रियम्।
पतितौ भवतो गत्वा नियुक्तावप्यनापदि॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये॥

विधवायां नियुक्तस्तु घृताक्तोवाग्यतो निशि।
एकमुत्पादयेत् पुत्रं न द्वितीयं कथंचन॥

द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः।
अनिर्वृत्तं नियोगार्थं पश्यन्तोधर्मतस्तयोः॥

विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि।
गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्॥

नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः।
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ॥

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः॥ ६५

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति ॥ ६६
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥
ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥
यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथोभजेताप्रसवात् सकृत् सकृदृतावृतौ ॥
न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥
विधिवत्प्रतिगृह्यापि त्यजेत् कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥
यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् ।
तस्य तद्वितथं कुर्य्यात् कन्यादातुर्दुरात्मनः ॥
विधाय वृत्तिं भार्य्यायाः प्रवसेत् कार्य्यवान्नरः ।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥
विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥
प्रोषितोधर्मकार्य्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः ।
विद्यार्थं षट् यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥
संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः ।
ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ॥ ७७

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा ।
सा त्रीन् मासान् परित्याज्या विभूषणपरिच्छदा ॥
उन्मत्तं पतितं क्लीवमवीजं पापरोगिणम् ।
न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम् ॥
मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता व्याधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥
वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥
या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः ।
सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥
अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥
प्रतिषिद्धापि चेद् या तु मद्यमभ्युदयेष्वपि ।
प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥
यदि स्वाश्चापराश्चैव विन्देरन् योषितो द्विजाः ।
तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥
भर्त्तुः शरीरशुश्रूषां धर्मकार्य्यंच नैत्यिकम् ।
स्वा चैव कुर्य्यात् सर्व्वेषां नास्वजातिः कथंचन ॥
यस्तु तत्कारयेन्मोहात् स्वजात्या स्थितयान्यया ।
यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः ॥
उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥
काममामरणात्तिष्ठेद् गृहे कन्यर्त्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९

त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती ।
ऊर्द्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९०
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किंचिदवाप्नोति न च यं साधिगच्छति ॥
अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥
पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥
त्रिंशद्वर्षोद्वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः ॥
देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥
प्रजानार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः ।
तस्मात् साधारणोधर्म्मः श्रुतौ पत्न्या सहोदितः ॥
कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् ।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम् ॥
एतत्तु न परे चक्रुर्नापरे जातु साधवः ।
यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥
नानुशुश्रुम जात्वेतत् पूर्व्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥
अन्योन्यस्याव्यभिचारोभवेदामरणान्तिकः ।
एषधर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥ १०१

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नाभिचरेतां तौ वियुक्तावितरेतरम् ॥ १०२

एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः ।
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ॥
ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥
ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात् सर्वमर्हति ॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ।
स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥
पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः ।
पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ।
ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः ॥
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।
अज्येष्ठवृत्तिर्यस्तु स्यात् स सम्पूज्यस्तु बन्धुवत् ॥
एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्द्धते धर्मस्तस्माद्धर्म्या पृथक् क्रिया ॥
ज्येष्ठस्य विंशउद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः ॥
ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् ।
येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम ॥

सर्वेषां धनजातानामाददीताग्र्यमग्रजः।
यच्च सातिशयं किंचिद्दशतश्चाप्नुयाद्वरम्॥ ११४
उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु।
यत्किञ्चिदेव देयन्तु ज्यायसे मानवर्द्धनम्॥
एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना॥
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः।
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः॥
स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
स्वात् स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः॥
अजाविकं सैकशफं न जातु विषमं भजेत्।
अजाविकन्तु विषमं ज्येष्ठस्यैव विधीयते॥
यवीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेत्यदि।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः॥
उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते।
पिता प्रधानं प्रजने तस्माद्धर्मेण तं भजेत्॥
पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्वजः।
कथं तत्र विभागः स्यादिति चेत् संशयो भवेत्॥
एकं वृषभमुद्धारं संहरेत स पूर्वजः।
ततो परे ज्येष्ठवृषास्तदूनानां स्वमातृतः॥
ज्येष्ठस्तु जातो ज्येष्ठायां हरेद्वृषभषोड़शाः।
ततः स्वमातृतः शेषा भजेरन्निति धारणा॥
सदृशस्त्रीषु जातानां पुत्त्राणामविशेषतः।
न मातृतो ज्यैष्ठमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥ १२५

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥ १२६
अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्॥
अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥
ददौ स दश धर्माय कश्यपाय त्रयोदश।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्॥
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥
मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव सः।
दौहित्र एव च हरेदपुत्रस्याखिलं धनम्॥
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च॥
पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः॥
पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥
अपुत्रायां मृतायान्तु पुत्रिकायां कथंचन।
धनं तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन्॥
अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम्॥
पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम्॥ १३७

पुंनाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥ १३८
पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते।
दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत्॥
मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तत् पितुः पितुः॥
उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः।
स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः॥
गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्वचित्।
गोत्ररिक्थानुगः पिंडो व्यपैति ददतः स्वधा॥
अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्।
उभौ तौ नार्हतो भागं जारजातककामजौ॥
नियुक्तायामपि पुमान्नार्य्यां जातोऽविधानतः।
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः॥
हरेत्तत्र नियुक्तायां जातः पुत्रो यथौरसः।
क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः॥
धनं यो विभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्॥
या नियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयात्।
तं कामजमरिक्थीयं वृथोत्पन्नं प्रचक्षते॥
एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु।
बह्वीषु चैकजातानां नानास्त्रीषु निबोधत॥
ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः।
तासां पुत्रेषु जातेषु विभागेयं विधिः स्मृतः॥१४९

कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च।
विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः॥ १५०
त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः।
वैश्याजः सार्द्धमेवांशमंशं शूद्रासुतो हरेत्॥
सर्व्वं वा रिक्थजातन्तु दशधा परिकल्प्य च।
धर्म्यं विभागं कुर्व्वीत विधिनानेन धर्म्मवित्॥
चतुरोऽंशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः।
वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत्॥
यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्म्मतः॥
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥
समवर्णासु ये जाताः सर्व्वे पुत्रा द्विजन्मनाम्।
उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम्॥
शूद्रस्य तु सवर्णैव नान्या भार्य्या विधीयते।
तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्॥
पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः।
तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।
स्वयन्दत्तश्च शौद्रश्च षड्दायादबान्धवाः॥
यादृशं फलमाप्नोति कुप्लवैः सन्तरन् जलम्।
तादृशं फलमाप्नोति कुपुत्रैः सन्तरंस्तमः॥ १६१

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यस्य यत् पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥ १६२
एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥ ১৬৩
षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।
औरसो विभजन् दायं पित्र्यं पंचममेव वा॥ ১৬৪
औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः॥ ১৬৫
स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम्।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्॥ ১৬৬
यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥ ১৬৭
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः॥ ১৬৮
सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः॥ ১৬৯
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः॥ ১৭০
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती।
वोढुः स गर्भो भवति सहोढ इति चोच्यते॥ १७२

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥ १७४
या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥
सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥
मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः ॥
दास्यां वा दासदास्यां वा यः शूद्रस्य सुतोभवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मोव्यवस्थितः ॥
क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः।
यस्य ते बीजतोजातास्तस्य ते नेतरस्य तु ॥
भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणोमनुरब्रवीत् ॥
सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥
श्रेयसः श्रेयसोऽभावे पापीयान्रिक्थमर्हति।
बहवश्चेत्तु सदृशा सर्वे रिक्थस्य भागिनः ॥
न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एवच ॥ १८५

त्रयाणामुदकं कार्य्यं त्रिषु पिंडः प्रवर्त्तते।
चतुर्थः सम्प्रदातैषां पंचमो नोपपद्यते॥ १८६
अनन्तरः सपिंडाद्यस्तस्य तस्य धनं भवेत्।
अतऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्यएव वा॥
सर्व्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।
त्रैविद्याः शुचयो दान्तास्तथाधर्म्मो न हीयते॥
अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।
इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः॥
संस्थितस्यानपत्यस्य सगोत्रात् पुत्रमाहरेत्।
तत्र यद्रिक्थजातं स्यात्तत्तस्मिन् प्रतिपादयेत्॥
द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।
तयोर्यद्यस्य पित्र्यं स्यात्तत् स गृह्णीत नेतरः॥
जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः॥
यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामह्या धनात् किंचित् प्रदेयं प्रीतिपूर्व्वकम्॥
अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥
अन्वाधेयंच यद्दत्तं पत्या प्रीतेन चैव यत्।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत्॥
ब्राह्मदैवार्षगान्धर्व्वप्रजापत्येषु यद्वसु।
अप्रजायामतीतायां भर्त्तुरेव तदिष्यते॥
यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अप्रजायामतीतायां मातापित्रोस्तदिष्यते॥ १९७

स्त्रियान्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन।
ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत्॥ १९८
न निर्हारं स्त्रीयः कुर्य्युः कुटुम्बाद्बहुमध्यगात्।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया॥
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तं भजेरन् दायादा भजमानाः पतन्ति ते॥
अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः॥
सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्॥
यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथंचन।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति॥
यत् किंचित् पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।
भागो यवीयसां तत्र यदि विद्यानुपालिनः॥
अविद्यानान्तु सर्वेषामीहातश्चेद्धनं भवेत्।
समस्तत्र विभागः स्यादपित्र्य इति धारणा॥
विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्।
मैत्रमौद्वाहिकंचैव माधुपर्किकमेव च॥
भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम्॥
अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत्।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥
पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।
न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्॥ २०९

विभक्ता सह जीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥ २१०
येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥
सोदर्य्या विभजेरंस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिनश्च सनाभयः॥
यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥
सर्वएव विकर्मस्था नार्हन्ति भ्रातरोधनम्।
न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम्॥
भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह।
न पुत्रभागं विषमं पिता दद्यात् कथंचन॥
ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह॥
अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥
ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किंचित् तत्सर्वं समतां नयेत्॥
वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥
अयमुक्तोविभागोवः पुत्राणाञ्च क्रियाविधिः।
क्रमशः क्षेत्रजादीनां द्युतधर्मं निबोधत॥
द्यूतं समाह्वयंचैव राजा राष्ट्रान्निवारयेत्।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्॥ २२१

प्रकाशमेतत् तास्कर्य्यं यद्देवनसमाह्वयौ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत्॥ २२२
अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः॥
द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत वा।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः॥
कितवान् कुशीलवान् क्रूरान् पाषण्डस्थांश्च मानवान्।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत् पुरात्॥
एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः।
विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः॥
द्यूतमेतत् पुराकल्पे दृष्टं वैरकरं महत्।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत योनरः।
तस्य दण्डविकल्पः स्याद् यथेष्टं नृपतेस्तथा॥
क्षत्रविट् शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥
स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम्।
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥
ये नियुक्तास्तु कार्य्येषु हन्युः कार्य्याणि कार्य्यिणाम्।
धनोष्मणा पच्यमानास्तान्निःस्वान् कारयेन्नृपः॥
कूटशासनकर्तॄंश्च प्रकृतीनाञ्च दूषकान्।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥
तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्।
कृतं तद्धर्मतोविद्यान्न तद्भूयोनिवर्त्तयेत्॥ २३३

अमात्याः प्राड्विवाकोवा यत् कुर्य्युः कार्य्यमन्यथा।
तत् स्वयं नृपतिः कुर्य्यात्तान् सहस्रञ्च दण्डयेत्॥ २३४

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः।
एते सर्व्वे पृथक् ज्ञेया महापातकिनो नराः॥
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्व्वताम्।
शारीरं धनसंयुक्तं दंडं धर्म्यं प्रकल्पयेत्॥
गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्॥
असम्भोज्या ह्यसंयाज्या असंपाठ्या विवाहिनः।
चरेयुः पृथिवीं दीनाः सर्व्वधर्म्मबहिष्कृताः॥
ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम्॥
प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितम्।
नांक्या राज्ञा ललाटे स्युर्दाप्यस्तूत्तमसाहसम्॥
आगःसु ब्राह्मणस्यैव कार्य्योमध्यम साहसः।
विवास्योवा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः॥
इतरे कृतवन्तस्तु पापान्येतान्यकामतः।
सर्व्वस्वहारमर्हन्ति कामतस्तु प्रवासनम्॥
नाददीत नृपः साधुर्म्महापातकिनोधनम्।
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते॥
अप्सु प्रवेश्य तं दंडं वरुणायोपपादयेत्।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥
ईशो दंडस्य वरुणो राज्ञां दंडधरोहि सः।
ईशः सर्व्वस्य जगतो ब्राह्मणोवेदपारगः॥ २४५

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम्।
तत्र कालेन जायन्ते मानवा दीर्घजीविनः॥ २४६
निष्पद्यन्ते च शस्यानि यथोप्तानि विशां पृथक्।
बालाश्च न प्रमीयन्ते विकृतं न च जायते॥
ब्राह्मणान् बाधमानस्तु कामादवरवर्णजम्।
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः॥
यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः॥
उदितोऽयं विस्तरशो मिथो विवदमानयोः।
अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः॥
एवं धर्म्याणि कार्याणि सम्यक्कुर्वन्महीपतिः।
देशानलब्धान्लिप्सेत लब्धांश्च परिपालयेत्॥
सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम्॥
रक्षणादार्यवृत्तानां कण्टकानाञ्च शोधनात्।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः॥
अशासंस्तस्करान् यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते॥
निर्भयन्तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम्।
तस्य तद्वर्द्धते नित्यं सिच्यमानइव द्रुमः॥
द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारकान्।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः॥
प्रकाशवंचकास्तेषां नानापण्योपजीविनः।
प्रच्छन्नवंचकास्त्वेते ये स्तेनाटविकादयः॥ २५७

सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः।
शीतातपाभिघातांश्च विविधानि भयानि च ॥ ७७
असकृद्गर्भवासेषु वासं जन्म च दारुणम्।
बन्धनानि च कष्टानि परप्रेष्यत्वमेव च ॥ ७८
बन्धुप्रियवियोगांश्च संवासञ्चैव दुर्जनैः।
द्रव्यार्जनञ्च नाशञ्च मित्रामित्रस्य चार्जनम् ॥ ७९
जरां चैवाप्रतीकारां व्याधिभिश्चोपपीड़नम्।
क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥ ८०
यादृशेन तु भावेन यद्यत् कर्म निषेवते।
तादृशेन शरीरेण तत्तत् फलमुपाश्नुते ॥ ८१
एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः।
निःश्रेयसकरं कर्म विप्रस्येदं निबोधत ॥ ८२
वेदाभ्यासस्तपोज्ञानमिन्द्रियाणाञ्च संयमः।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ ८३
सर्वेषामपि चैतेषां शुभानामिह कर्मणाम्।
किंचित् श्रेयस्करतरं कर्मोक्तं पुरुषं प्रति ॥ ८४
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ ८५
षण्णामेषान्तु सर्वेषां कर्मणां प्रेत्य चेह च।
श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् ॥ ८६
वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ ॥ ८७
सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ ८८

इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्त्यते।
निष्कामं ज्ञानपूर्वन्तु निवृत्तमुपदिश्यते॥ ८९
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्।
निवृत्तं सेवमानस्तु भूतान्यत्येति पंच वै॥९०
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति॥ ९१
यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्॥ ९२
एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः।
प्राप्यैतत् कृतकृत्योहि द्विजो भवति नान्यथा॥ ९३
पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यंचाप्रमेयंच वेदशास्त्रमिति स्थितः॥ ९४
या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ ९५
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च॥ ९६
चातुर्वर्ण्यं त्रयोलोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भवद्भविष्यंच सर्वं वेदात् प्रसिध्यति॥ ९७
शब्दः स्पर्शश्च रूपंच रसोगन्धश्च पंचमः।
वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः॥ ९८
विभर्त्ति सर्वभूतानि वेदशास्त्रं सनातनम्।
तस्मादेतत् परं मन्ये तज्जन्तोरस्य साधनम्॥ ९९
सैनापत्यंच राज्यंच दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यंच वेदशास्त्रविदर्हति॥ १००

यथा जातबलोवह्निर्दहत्यार्द्रानपि द्रुमान्।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः॥ १०१

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥ १०२

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
धारिभ्योज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः॥ १०३

तपोविद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसाकिल्बिषं हन्ति विद्यया मृतमश्नुते॥ १०४

प्रत्यक्षंचानुमानंच शास्त्रंच विविधागमम्।
त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता॥ १०५

आर्षं धर्मोपदेशंच वेदशास्त्राऽविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ १०६

नैःश्रेयसमिदं कर्म यथोदितमशेषतः।
मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते॥ १०७

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।
यं शिष्टा ब्राह्मणा ब्रूयुः सः धर्मः स्यादशङ्कितः॥ १०८

धर्मेणाधिगतो यैस्तु वेदः सः परिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥ १०९

दशावरा वा परिषद् यं धर्मं परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत्॥ ११०

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा॥ १११

ऋग्वेदविद् यजुर्विच्च सामवेदविदेव च।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये॥ ११२

एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः॥ ११३
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां परिषत्त्वं न विद्यते॥ ११४
यं वदन्ति तमो भूता मूर्खा धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति॥ ११५
एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम्।
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम्॥ ११६
एवं स भगवान् देवो लोकानां हितकाम्यया।
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान्॥ ११७
सर्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः।
सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मनः॥ ११८
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्॥ ११९
खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम्।
पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु॥ १२०
मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम्।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम्॥ १२१
प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्॥ १२२
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ १२३
एष सर्वाणि भूतानि पंचभिर्व्याप्य मूर्त्तिभिः।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्॥ १२४

एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्॥ १२५

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः।
भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम्॥ १२६

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां
द्वादशोऽध्यायः॥

मनुसंहिता समाप्ता।